रयः, एवंविधं दिव्यं यानविमानं विकुर्वस्व विकुर्व्य च एतामाज्ञप्तिं प्रत्यर्प्पय, कृतकृत्यो निवेदय इत्यर्थः। तदनु यदनुतिष्ठति स्म पालकस्तदाह—

तए णं से पालयदेवे सक्केणं देविंदेणं देवरण्णा एवं वुत्ते समाणे हट्ठतुट्ठ जाव वेउव्विअसमुग्घाएणं समोहणित्ता तहेव करेइ इति, तस्स णं दिव्वस्स जाणविमाणस्स तिदिसिं तओ तिसोवाणपडिरूवगा वण्णओ, तेसि णं पडिरूवगाणं पुरओ पत्तेअं २ तोरणा वण्णओ जाव पडिरूवा १, तस्स णं जाणविमाणस्स अंतो बहुसमरमणिज्जे भूमिभागे, से जहा नामए आलिंगपुक्खरेइ वा जाव दीविअचम्मेइ वा अणेगसंकुकीलकसहस्सवितते आवडपच्चावडसेढिपसेढिसुत्थिअसोवत्थिअवद्धमाणपूसमाणवमच्छंडगमगरंडगजारमारफुल्लावलीपउमपत्तसागरतरंगवसंतलयपउमलयभत्तिचित्तेहिं सच्छाएहिं सप्पभेहिं समरीइएहिं सउज्जोएहिं णाणाविहपञ्चवण्णेहिं मणीहिं उवसोभिए २, तेसि णं मणीणं वण्णे गन्धे फासे अ भाणिअव्वे जहा रायप्पसेणइज्जे, तस्स णं भूमिभागस्स बहुमज्झदेसभाए पिच्छाघरमण्डवे अणेगखम्भसयसण्णिविट्ठे वण्णओ जाव पडिरूवे, तस्स उल्लोए पउमलयभत्तिचित्ते जाव सव्वतवणिज्जमए जाव पडिरूवे, तस्स णं मण्डवस्स बहुसमरमणिज्जस्स भूमिभागस्स बहुमज्झदेसभागंसि महं एगा मणिपेढिआ अट्ठ जोअणाइं आयामविक्खम्भेणं चत्तारि जोअणाइं बाहल्लेणं सव्वमणिमयी वण्णओ, तीए उवरिं महं एगे सीहासणे वण्णओ, तस्सुवरिं महं एगे विजयदूसे सव्वरयणामए वण्णओ, तस्स मज्झदेसभाए एगे वइरामए अंकुसे, एत्थ णं महं एगे कुम्भिक्के मुत्तादामे, से णं अन्नेहिं तदद्धुच्चत्तप्पमाणमित्तेहिं चउहिं अद्धकुम्भिक्केहिं मुत्तादामेहिं सव्वओ समन्ता संपरिक्खित्ते, ते णं दामा तवणिज्जलंबूसगा सुवण्णपयरगमण्डिआ णाणामणिरयणविविहहारद्धहारउवसोभिआ समुदया ईसिं अण्णमण्णमसंपत्ता पुव्वाइएहिं वाएहिं मन्दं एइज्जमाणा २ जाव निव्वुइकरेणं सद्देणं ते पएसे आपूरेमाणा २ जाव अईव उवसोभेमाणा २ चिट्ठंतित्ति, तस्स णं सीहासणस्स अवरुत्तरेणं उत्तरेणं उत्तरपुरत्थिमेणं एत्थ णं सक्कस्स चउरासीए सामाणिअसाहस्सीणं चउरासीइ भद्दासणसाहस्सीओ पुरत्थिमेणं अट्ठण्हं अग्गमहिसीणं एवं दाहिणपुरत्थिमेणं अब्भिंतरपरिसाए दुवालसण्हं देवसाहस्सीणं दाहिणेणं मज्झिमाए चउद्दसण्हं देवसाहस्सीणं दाहिणपच्चत्थिमेणं बाहिरपरिसाए सोलसण्हं देवसाहस्सीणं पच्चत्थिमेणं सत्तण्हं अणिआहिवईणंति, तए णं तस्स सीहासणस्स चउद्दिसिं चउण्हं चउरासीणं आयरक्खदेवसाहस्सीणं एवमाई विभासिअव्वं सूरिआभगमेणं जाव पच्चप्पिणन्तित्ति ( सूत्रं ११६ )

'तए णं से पालए देवे सक्केण'मित्यादि, ततः स पालको देवः शक्रेण देवेन्द्रेण देवराज्ञा एवमुक्तः सन् हृष्टतुष्ट यावद् वैक्रियसमुद्घातेन समवहत्य तथैव करोति, पालकविमानं रचयतीत्यर्थः । अथ विमानस्वरूपवर्णनायाह— 'तस्स ण'मित्यादि इति सूत्रद्वयी व्यक्ता, अथ तद्भिभागं वर्णयन्नाह—'तस्स णं'इत्यादि, इदं प्राग्वद् ज्ञेयम्, नवरं मणीनां वर्णो गन्धः स्पर्शश्च भणितव्यो यथा राजप्रश्नीये द्वितीयोपाङ्गे, अत्रापि जगतीपद्मवरवेदिकावर्णने मणिवर्णादयो व्याख्यातास्ततोऽपि वा बोद्धव्याः, अत्र प्रेक्षागृहमण्डपवर्णनायाह—'तस्स ण'मित्यादि, यावच्छब्दग्राह्यं व्याख्या च यमकराजधानीगतसुधर्मासभाधिकारतो ज्ञेये, उपरिभागवर्णनायाह—'तस्स उल्लोए'इत्यादि, तस्योल्लोकः

उपरिभागः पद्मलताभक्तिचित्रः यावत्सर्वात्मना तपनीयमयः प्रथमयावच्छब्देन अशोकलताभक्तिचित्र इत्यादिपरिग्रहः द्वितीययावच्छब्दाद् अच्छे सण्हे इत्यादिविशेषणग्रहः, अत्र च राजप्रश्नीये सूर्याभयानविमानवर्णकेऽक्षपाटकसूत्रं दृश्यते परं बहुष्वेतत्सूत्रादर्शेषु अदृष्टत्वान्न लिखितं, अथात्र मणिपीठिकावर्णनायाह—'तस्स ण'मित्यादि, व्यक्तं, 'तीए उवरिं'इत्यादि, एतद्व्याख्या विजयद्वारस्थप्रकण्ठकप्रासादगतसिंहासनसूत्रवदवसेया। 'ते ण'मित्यादि, इदं सूत्रं प्राक् पद्मवरवेदिकाजालवर्णके व्याख्यातमिति ततो बोध्यं, अत्र प्रथमयावत्पदात् 'वेइज्जमाणा २ पलम्बमाणा २ पझंझमाणा २ ओरालेणं मणुण्णेणं मणहरेणं कण्णमण'इति संग्रहः, द्वितीययावत्पदात् 'ससिरीए' इति ग्राह्यं, सम्प्रति अत्रास्थाननिवेशनप्रक्रियामाह—'तस्स ण'मित्यादि, 'तस्य' सिंहासनस्य पालकविमानमध्यभागवर्त्तिनोऽपरोत्तरायां—वायव्यामुत्तरस्यां उत्तरपूर्वायां—ऐशान्यां अत्रान्तरे शक्रस्य चतुरशीतेः सामानिकसहस्राणां चतुरशीतिभद्रासनसहस्राणि, उक्तदिक्त्रये चतुरशीतिभद्रासनसहस्राणीत्यर्थः, पूर्वस्यां दिश्यष्टानामग्रमहिषीणामष्ट भद्रासनानि, एवं दक्षिणपूर्वायां—अग्निकोणेऽभ्यन्तरपर्षदः सम्बन्धिनां द्वादशानां देवसहस्राणां द्वादश भद्रासनसहस्राणि दक्षिणस्यां मध्यमायाः पर्षदश्चतुर्दशानां देवसहस्राणां चतुर्दश भद्रासनसहस्राणि दक्षिणपश्चिमायां—नैर्ऋतकोणे बाह्यपर्षदः षोडशानां देवसहस्राणां षोडश भद्रासनसहस्राणि पश्चिमायां सप्तानामनीकाधिपतीनां सप्त भद्रासनानीति, 'तए ण'मित्यादि, 'ततः' प्रथमवलयस्थापनानन्तरं द्वितीये वलये तस्य सिंहासनस्य चतुर्दिशि चतसृणां चतुरशीतानां—चतुर्गुणीकृतचतुरशीतिसंख्याकानां



आत्मरक्षकदेवसहस्राणां, षट्त्रिंशत्सहस्राधिकलक्षत्रयमितानामात्मरक्षकदेवानामित्यर्थः, तावन्ति भद्रासनानि विकुर्वितानीत्यर्थः, एवमादि विभाषितव्यं—इत्यादि वक्तव्यं सूर्याभगमेन यावत्प्रत्यर्प्पयन्ति, यावत्पदसंग्रहश्चायम्—'तस्स णं दिव्वस्स जाणविमाणस्स इमे एआरूवे वण्णावासे पण्णत्ते, से जहा णामए अइरुग्गयस्स हेमंतिअबालसूरिअस्स खाइङ्गिालाण वा रत्तिं पज्जलिआणं जासुमणवणस्स वा केसुअवणस्स वा पलिजायवणस्स वा सव्वओ समन्ता संकुसुमिअस्स, भवे एआरूवे सिआ?, णो इणठ्ठे समट्ठे, तस्स णं दिव्वस्स जाणविमाणस्स इत्तो इट्ठतराए चेव ४ वण्णे पण्णत्ते, गन्धो फासो अ जहा मणीणं, तए णं से पालए देवे तं दिव्वं जाणविमाणं विउव्वित्ता जेणेव सक्के ३ तेणेव उवागच्छइ २ त्ता सक्कं ३ करयलपरिग्गहिअं सिरसावत्तं मत्थए अंजलिं कट्टु जएणं विजएणं वद्धावेइ २ त्ता तमाणत्तिअ'मिति, अत्र व्याख्या—तस्य दिव्यस्य यानविमानस्यायमेतद्रूपो वर्णव्यासः प्रज्ञप्तः, स यथानामकोऽचिरोद्गतस्य—तत्कालमुदितस्य हैमन्तिकस्य—शिशिरकालसम्बन्धिनो बालसूर्यस्य खादिराङ्गाराणां वा'रत्ति'मिति सप्तम्यर्थे द्वितीया रात्रौ प्रज्वालितानां जपावनस्य वा किंशुकवनस्य वा पारिजाताः—कल्पद्रुमास्तेषां वनस्य वा सर्वतः समन्तात् सम्यक् कुसुमितस्य, अत्र शिष्यः पृच्छति—भवेदेतद्रूपः स्यात्—कथञ्चित्?, सूरिराह—नायमर्थः समर्थः, तस्य दिव्यस्य यानविमानस्य इत इष्टतरक एव कान्ततरक एवेत्यादि प्राग्वद्, गन्धः स्पर्शश्च यथा प्राङ्मणीनामुक्तस्तथेति, ननु अत्रैव पालकविमानवर्णके प्राग्मणीनां वर्णादय उक्ताः पुनर्विमानवर्णकादिकथनेन पुनरुक्तिरिति चेत्, मैवं, पूर्वं हि अवयवभूतानां

मणीनां वर्णादयः प्रोक्ताः सम्प्रति अवयविनो विमानस्येति नोक्तदोषः, 'तओ णं से पालए देवे' इत्यादिकमाज्ञाप्रत्यर्पणसूत्रं स्वतोऽभ्यूह्यम् । अथ शक्रकृत्यमाह—

तए णं से सक्के जाव हट्ठहिअए दिव्वं जिणेंदाभिगमणजुग्गं सव्वालंकारविभूसिअं उत्तरवेउव्विअं रूवं विउव्वइ २ त्ता अट्ठहिं अग्गमहिसीहिं सपरिवाराहिं णट्टाणीएणं गन्धव्वाणीएण य सद्धिं तं विमाणं अणुप्पयाहिणीकरेमाणे २ पुव्विल्लेणं तिसोवाणेणं दुरूहइ २ त्ता जाव सीहासणंसि पुरत्थाभिमुहे सण्णिसण्णेत्ति, एवं चेव सामाणिआवि उत्तरेणं तिसोवाणेणं दुरूहित्ता पत्तेअं २ पुव्वण्णत्थेसु भद्दासणेसु णिसीअंति अवसेसा य देवा देवीओ अ दाहिणिल्लेणं तिसोवाणेणं दुरूहित्ता तहेव जाव णिसीअंति, तए णं तस्स सक्कस्स तंसि दुरूढस्स इमे अट्ठट्ठमंगलगा पुरओ अहाणुपुव्वीए संपट्ठिआ, तयणंतरं च णं पुण्णकलसभिंगारं दिव्वा य छत्तपडागा सचामरा य दंसणरइअआलोअदरिसणिज्जा वाउद्धुअविजयवेजयन्ती अ समूसिआ गगणतलमणुलिहंती पुरओ अहाणुपुव्वीए संपत्थिआ, तयणन्तरं छत्तभिंगारं, तयणंतरं च णं वइरामयवट्टलट्ठसंठिअसुसिलिट्ठपरिघट्ठपट्ठसुपइट्ठिए विसिट्ठे अणेगवरपञ्चवण्णकुडभीसहस्सपरिमण्डिआभिरामे वाउद्धुअविजयवेजयन्तीपडागाछत्ताइच्छत्तकलिए तुंगे गयणतलमणुलिहंतसिहरे जोअणसहस्समूसिए महइमहालए महिंदज्झए पुरओ अहाणुपुव्वीए संपत्थिएत्ति, तयणन्तरं च णं सरूवनेवत्थपरिअच्छिअसुसज्जा सव्वालंकारविभूसिआ पञ्च अणिआ पञ्च अणिआहिवईणो जाव संपट्ठिआ, तयणन्तरं च णं बहवे आभिओगिआ देवा य देवीओ अ सएहिं सएहिं रूवेहिं जाव णिओगेहिं सक्कं देविंदं देवरायं पुरओ अ मग्गओ अ अहा०, तयणन्तरं च णं बहवे सोहम्मकप्पवासी

देवा य देवीओ अ सव्विद्धीए जाव दुरूढा सम्माणा मग्गओ अ जाव संपट्ठिआ, तए णं से सक्के तेणं पञ्चाणिअपरिक्खित्तेणं जाव महिंदज्झएणं पुरओ पकड्ढिज्जमाणेणं चउरासीए सामाणिअ जाव परिवुडे सव्विद्धीए जाव रवेणं सोहम्मस्स कप्पस्स मज्झंमज्झेणं तं दिव्वं देवद्धिं जाव उवदंसेमाणे २ जेणेव सोहम्मस्स कप्पस्स उत्तरिल्ले निज्जाणमग्गे तेणेव उवागच्छइ उवागच्छित्ता जोअणसयसाहस्सीएहिं विग्गहेहिं ओवयमाणे २ ताए उक्किट्ठाए जाव देवगईए वीईवयमाणे २ तिरियमसंखिज्जाणं दीवसमुद्दाणं मज्झंमज्झेणं जेणेव णन्दीसरवरे दीवे जेणेव दाहिणपुरत्थिमिल्ले रइकरगपव्वए तेणेव उवागच्छइ २ त्ता एवं जा चेव सूरिआभस्स वत्तव्वया णवरं सक्काहिगारो वत्तव्वो इति जाव तं दिव्वं देविद्धिं जाव दिव्वं जाणविमाणं पडिसाहरमाणे २ जाव जेणेव भगवओ तित्थयरस्स जम्मणनगरे जेणेव भगवओ तित्थयरस्स जम्मणभवणे तेणेव उवागच्छति २ त्ता भगवओ तित्थयरस्स जम्मणभवणं तेणं दिव्वेणं जाणविमाणेणं तिक्खुत्तो आयाहिणपयाहिणं करेइ २ त्ता भगवओ तित्थयरस्स जम्मणभवणस्स उत्तरपुत्थिमे दिसीभागे चतुरंगुलमसंपत्तं धरणियले तं दिव्वं जाणविमाणं ठवेइ २ त्ता अट्ठहिं अग्गमहिसीहिं दोहिं अणीएहिं गन्धव्वाणीएण य णट्टाणीएण य सद्धिं ताओ दिव्वाओ जाणविमाणाओ पुरत्थिमिल्लेणं तिसोवाणपडिरूवएणं पच्चोरुहइ, तए णं सक्कस्स देविंदस्स देवरण्णो चउरासीइ सामाणिअसाहस्सीओ दिव्वाओ जाणविमाणाओ उत्तरिल्लेणं तिसोवाणपडिरूवएणं पच्चोरुहंति, अवसेसा देवा य देवीओ अ ताओ दिव्वाओ जाणविमाणाओ दाहिणिल्लेणं तिसोवाणपडिरूवएणं पच्चोरुहंतित्ति । तए णं से सक्के देविन्दे देवराया चउरासीए सामाणिअसाहस्सीएहिं जाव सद्धिं संपरिवुडे सव्विद्धीए जाव दुंदुभिणिग्घोसणाइयरवेणं जेणेव भगवं तित्थयरे तित्थयरमाया य तेणेव उवागच्छइ २ त्ता आलोए चेव पणामं करेइ २ त्ता भगवं तित्थयरं तित्थयरमायरं च तिक्खुत्तो आयाहिणपयाहिणं करेइ २ त्ता करयल

जाव एवं वयासी–णमोत्थु ते रयणकुच्छिधारए एवं जहा दिसाकुमारीओ जाव धण्णासि पुण्णासि तं कयत्थाऽसि, अहण्णं देवाणुप्पिए! सक्के णामं देविन्दे देवराया भगवओ तित्थयरस्स जम्मणमहिमं करिस्सामि, तं णं तुब्भाहिं ण भाइव्वंतिकट्टु ओसोवणिं दलयइ २ त्ता तित्थयरपडिरूवगं विउव्वइ तित्थयरमाउआए पासे ठवइ २ त्ता पञ्च सक्के विउव्वइ विउव्वित्ता एगे सक्के भगवं तित्थयरं करयलपुडेणं गिण्हइ एगे सक्के पिट्ठओ आयवत्तं धरेइ दुवे सक्का उभओ पासिं चामरुक्खेवं करेन्ति एगे सक्के पुरओ वज्जपाणी पकड्ढइत्ति, तए णं से सक्के देविन्दे देवराया अण्णेहिं बहूहिं भवणवइवाणमन्तरजोइसवेमाणिएहिं देवेहिं देवीहि अ सद्धिं संपरिवुडे सव्विद्धीए जाव णाइएणं ताए उक्किट्ठाए जाव वीईवयमाणे जेणेव मन्दरे पव्वए जेणेव पंडगवणे जेणेव अभिसेअसिला जेणेव अभिसेअसीहासणे तेणेव उवागच्छइ २ त्ता सीहासणवरगए पुरत्थाभिमुहे सण्णिसण्णेत्ति ( सूत्रं ११७ )

'तए ण'मित्यादि, ततः स शक्र इत्यादि व्यक्तं, दिव्यं–प्रधानं जिनेन्द्रस्य भगवतोऽभिगमनाय–अभिमुखगमनाय योग्यं–उचितं यादृशेन वपुषा सुरसमुदायसर्वातिशायिश्रीर्भवति तादृशेनेत्यर्थः 'सर्वालङ्कारविभूषितं' सर्वैः–शिरःश्रवणाद्यलङ्कारैर्विभूषितं, उत्तरवैक्रियशरीरत्वात्, स्वाभाविकवैक्रियशरीरस्य तु आगमने निरलङ्कारतयैवोत्पादश्रवणात्, उत्तरं–भवधारणीयशरीरापेक्षया कार्योत्पत्तिकालापेक्षया चोत्तरकालभावि वैक्रियरूपं विकुर्वति, विकुर्व्य चाष्टाभिरग्रमहिषीभिः सपरिवाराभिः प्रत्येकं २ षोडशदेवीसहस्रपरिवारपरिवृताभिर्नाट्यानीकेन गन्धर्वानीकेन च सार्द्धं तं विमानमनुप्रदक्षिणीकुर्वन् २ पूर्वदिक्स्थेन त्रिसोपानेनारोहति, आरुह्य च यावच्छब्दात् 'जेणेव सीहासणे तेणेव



उवागच्छइ २ त्ता' इति ग्राह्यं, सिंहासने पूर्वाभिमुखः सन्निषण्ण इति । अथास्थानं सामानिकादिभिः यथा पूर्यते तथाऽऽह—'एवं चेव'इत्यादि, व्यक्तं, नवरं अवशेषाश्च–आभ्यन्तरपार्षद्यादयः। अथ प्रतिष्ठासोः शक्रस्य पुरः प्रस्थायिनां क्रममाह—'तए णं तस्स'इत्यादि, एतद्व्याख्या भरतचक्रिणोऽयोध्याप्रवेशाधिकारतो ज्ञेया, 'तए ण'मित्यादि, तदनन्तरं छत्रं च भृङ्गारं च छत्रभृङ्गारं समाहारादेकवद्भावः, छत्रं च 'वेरुलिअभिसंतविमलदण्ड'मित्यादिवर्णकयुक्तं भरतस्यायोध्याप्रवेशाधिकारतो ज्ञेयं, भृङ्गारश्च विशिष्टवर्णकचित्रोपेतः, पूर्वं च भृङ्गारस्य जलपूर्णत्वेन कथनात् अयं च जलरिक्तत्वेन विवक्षित इति न पौनरुक्त्यं, तदनन्तरं वज्रमयो–रत्नमयः तथा वृत्तं–वर्त्तुलं लष्टं–मनोज्ञं संस्थितं–संस्थानं आकारो यस्य स तथा, तथा सुश्लिष्टः–सुश्लेपापन्नावयवो मसृण इत्यर्थः परिघृष्ट इव परिघृष्टः खरशाणया पाषाणप्रतिमावत् मृष्ट इव मृष्टः सुकुमारशाणया पाषाणप्रतिमेव सुप्रतिष्ठितो न तु तिर्यक्पतिततया वक्रस्तत एतेषां पदद्वयद्वमीलनेन कर्मधारयः, अत एव शेषध्वजेभ्यो विशिष्टः–अतिशायी, तथाऽनेकानि वराणि पञ्चवर्णानि कुडभीनां–लघुपताकानां सहस्राणि तैः परिमण्डितः–अलंकृतः स चासावभिरामश्चेति, वातोद्धूतेत्यादिविशेषणद्वयं व्यक्तं, तथा गगनतलं–अम्बरतलमनुलिखत्–संस्पृशत् शिखरं–अग्रभागो यस्य स तथा, योजनसहस्रमुत्सृतोऽत एवाह—'महइमहालए'इति अतिशयेन महान् महेन्द्रध्वजः पुरतो यथानुपूर्व्या सम्प्रस्थित इति, 'तए ण'मित्यादि, तदनन्तरं स्वरूपं–स्वकर्मानुसारि नेपथ्यं–वेषः परिकच्छितः–परिगृहीतो यैस्तानि तथा, सुसज्जानि-

पूर्णसामग्रीकतया प्रगुणानि सर्वालङ्कारविभूषितानि पञ्चानीकानि पञ्चानीकाधिपतयश्च पुरतो यथानुपूर्व्या सम्प्रस्थितानि, 'तयणन्तरं च ण'मित्यादि, तदनन्तरं बहवः आभियोगिका देवाश्च देव्यश्च स्वकैः स्वकैः रूपैः—यथास्वकर्मोपस्थितैरुत्तरवैक्रियस्वरूपैर्यावच्छब्दात्स्वकैः स्वकैः विभवैः—यथास्वकर्मोपस्थितैर्विभवैः—सम्पत्तिभिः स्वकैर्नियोगैः—उपकरणैः शक्रं देवेन्द्रं देवराजं पुरतश्च मार्गतश्च—पृष्ठतः पार्श्वतश्च उभयोः यथानुपूर्व्या—यथावृद्धक्रमेण सम्प्रस्थिताः, 'तयणन्तरं च ण'मित्यादि, तदनन्तरं बहवः सौधर्मकल्पवासिनो देवाश्च देव्यश्च सर्वर्द्धा यावत्करणादिन्द्रस्य हरिनिगमेषिणं पुरः स्वाज्ञप्तिविषयकः प्रागुक्त आलापको ग्राह्यः, तेन स्वानि २ यानविमानवाहनानि आरूढाः सन्तो मार्गतश्च यावच्छब्दात् पुरतः पार्श्वतश्च शक्रस्य सम्प्रस्थिताः। अथ यथा शक्रः सौधर्मकल्पान्निर्याति तथा चाह— 'तए ण'मित्यादि, ततः स शक्रस्तेन—प्रागुक्तस्वरूपेण पञ्चभिः संग्रामिकैरनीकैः परिक्षिप्तेन—सर्वतः परिवृतेन यावत् पूर्वोक्तः सर्वो महेन्द्रध्वजवर्णको ग्राह्यः, महेन्द्रध्वजेन पुरतः प्रकृष्यमाणेन—निर्गम्यमानेन चतुरशीत्या सामानिकसहस्रैर्यावत्करणात् 'चउहिं चउरासीहिं आयरक्खदेवसाहस्सीहिं' इत्यादि ग्राह्यं, परिवृतः सर्वर्द्धा यावद्रवेण यावत्करणात् 'सव्वज्जुईए' इत्यादि प्रागुक्तं ग्राह्यं, सौधर्मस्य कल्पस्य मध्यंमध्येन तां दिव्यां देवर्द्धिं यावच्छब्दाद् 'दिव्वं देवजुइं दिव्वं देवाणुभावं' इति ग्रहः, सौधर्मकल्पवासिनं देवानामुपदर्शयन् २ यत्रैव सौधर्मकल्पस्योत्तराहो निर्याणमार्गो—निर्गमनसम्बन्धी पन्थास्तत्रैवोपागच्छति, यथा वरयिता नागराणां विवाहोत्सवस्फातिदर्शनार्थं राजपथे

याति नतु नष्टरथ्यादौ तथाऽयमपि, एतेन समग्रदेवलोकाधारभूतपृथिवीप्रतिष्ठितविमाननिरुद्धमार्गत्वेनेतस्ततः सञ्चरणाभावेन मध्यंमध्येनेति उत्तरिल्ले णिज्जाणमग्गे इत्युक्तमिति ये आहुस्ते आगमसाम्मत्यं युक्तिसाङ्गत्यं च प्रष्टव्याः, उपागत्य च योजनशतसाहस्रिकैः—योजनलक्षप्रमाणैर्विग्रहैः—क्रमैरिव गन्तव्यक्षेत्रातिक्रमरूपैः, एतेन स्थावरस्वरूपस्य विमानस्य पदन्यासरूपाः क्रमाः कथं भवेयुरिति शङ्का निरस्ता, अवपतन् अवपतन् तयोत्कृष्टया यावत्करणात् 'तुरिआए' इत्यादिग्रहः, देवगत्या व्यतिव्रजन् २ तिर्यगसंख्येयानां द्वीपसमुद्राणां मध्यंमध्येन यत्रैव नन्दीश्वरवरद्वीपो यत्रैव तस्यैव पृथुत्वमध्यभागे दक्षिणपूर्वः—आग्नेयकोणवर्त्ती रतिकरपर्वतस्तत्रैवोपागच्छति, इदं च स्थानांगाद्याशयेनोक्तं, अन्यथा प्रवचनसारोद्धारादिषु पठ्यमानानां पूर्वाद्यञ्जनगिरिविदिग्व्यवस्थितवापीद्वयद्वयान्तराले बहिःकोणयोः प्रत्यासत्तौ प्रत्येकं द्वय२भावेन तिष्ठतामष्टानां रतिकरपर्वतानां मध्ये विनिगमनाविरहात् कतरो रतिकरपर्वतो दक्षिणपूर्वः स्यादिति, ननु सौधर्मादवतरतः शक्रस्य नन्दीश्वरद्वीप एवावतरणं युक्तिमत्, न पुनरसंख्येयद्वीपसमुद्रातिक्रमेण तत्रागमनमिति, उच्यते, निर्याणमार्गस्यासंख्याततमस्य द्वीपस्य वा समुद्रस्य वा उपरिस्थितत्वेन सम्भाव्यमानत्वात् तत्रावतरणं, ततश्च नन्दीश्वराभिगमनेऽसंख्यातद्वीपसमुद्रातिक्रमणं युक्तिमदेवेति, अत्र दृष्टान्ताय सूत्रं 'एवं जा चेव'त्ति एवमुक्तरीत्या यैव सूर्याभस्य वक्तव्यता यथा सूर्याभः सौधर्मकल्पादवतीर्णस्तथाऽयमपीत्यर्थः, नवरं अयं भेदः—शक्राधिकारो वक्तव्यः—सौधर्मेन्द्रनाम्ना सर्वं वाच्यम् 'जाव तं दिव्वं' इत्यादि, प्रायो व्यक्तं, नवरमत्र

प्रथमयावच्छब्दो दृष्टान्तविषयीकृतसूर्याभाधिकारस्यावधिसूचनार्थः, स चात्रधिर्विमानप्रतिसंहरणपर्यन्तो वाच्यः, द्वितीययावच्छब्दो 'दिव्वं देवजुइं दिव्वं दिव्वाणुभावं' इति पदद्वयग्राही, अस्य चायमर्थः—दिव्यां देवर्द्धि—परिवारसम्पदं स्वविमानवर्जसौधर्मकल्पवासिदेवविमानानां मेरौ प्रेषणात्, तथा दिव्यां देवद्युतिं शरीराभरणादिह्रासेन तथा दिव्यं देवानुभावं देवगतिह्रस्वताऽऽपादनेन, तथा दिव्यं यानविमानं पालकनामकं जम्बूद्वीपपरिमाणन्यूनविस्तरायामकरणेन प्रतिसंहरन् २—संक्षिपन् संक्षिपन्निति, तृतीययावच्छब्दो 'जेणेव जम्बुद्दीवे दीवे जेणेव भरहे वासे' इति ग्राहकः, ननु पूर्वं त्रिसोपानप्रतिरूपकेणोत्तारः शक्रस्योक्तोऽपराभ्यां केषामुत्तार इत्याह—'तए णं सक्कस्स देविन्दस्स देवरण्णो' इत्यादि व्यक्तम्। अथ शक्रः किमकार्षीदित्याह—'तए णं से सक्के देविन्दे देवराया चउरासीए'इत्यादि, कण्ठ्यं, यावत्पदसंग्राह्यं तु पूर्वसूत्रानुसारेण बोध्यं, यदवादीत्तदाह—'णमुत्थु ते'इत्यादि, नमोऽस्तु तुभ्यं रत्नकुक्षिधारिके! एवंप्रकारं सूत्रं यथा दिक्कुमार्य आहुस्तथाऽवादीदित्यर्थः, यावच्छब्दादिदं ग्राह्यम्—जगप्पईवदाईए चक्खुणो अमुत्तस्स सव्वजगजीववच्छलस्स हिअकारगमग्गदेसिअवागिद्धिविभुप्पभुस्स जिणस्स णाणिस्स नायगस्स बुद्धस्स बोहगस्स सव्वलोगणाहस्स सव्वजगमङ्गलस्स णिम्ममस्स पवरकुलसमुप्पभवस्स जाईए खत्तियस्स जंसि लोगुत्तमस्स जणणी'ति, कियत्पर्यन्तमित्याह—धन्याऽसि पुण्याऽसि त्वं कृतार्थाऽसि, अहं देवानुप्रिये! शक्रो नाम देवेन्द्रो देवराजा भगवतस्तीर्थकरस्य जन्ममहिमां करिष्यामि, तन युष्माभिर्न भेतव्यमितिकृत्वा अवस्वापिनीं ददाति—सुते मेरुं नीते सुतविरहार्त्ता मा



दुःखभागभूदिति दिव्यनिद्रया निद्राणां करोतीत्यर्थः, दत्त्वा च तीर्थकरस्य मेरुं नेतव्यस्य भगवतः प्रतिरूपकं—जिनसदृशं रूपं विकुर्वन्ति, अस्मासु मेरुं गतेषु जन्ममहव्यापृतिव्यग्रेषु आसन्नदुष्टदेवतया कुतूहलादिनाऽपहृतनिद्रा सती मा इयं तथा भवत्विति भगवद्रूपान्निर्विशेषं रूपं विकुर्वतीत्यर्थः, विकुर्व्य च तीर्थकरमातुः पार्श्वे स्थापयति स्थापयित्वा च पञ्च शक्रान् विकुर्वति, आत्मना पञ्चरूपो भवतीत्यर्थः, विकुर्व्य च तेषां पञ्चानां मध्ये एकः शक्रो भगवन्तं तीर्थकरं परमशुचिना सरसगोशीर्षचन्दनलिप्तेन धूपवासितेनेति शेषः करतलयोः—ऊर्ध्वाधोव्यवस्थितयोः पुटं—सम्पुटं शुक्तिकासम्पुटमिवेत्यर्थः तेन गृह्णाति एकः शक्रः पृष्ठत आतपत्रं—छत्रं धरति द्वौ शक्रावुभयोः पार्श्वयोश्चामरोत्क्षेपं कुरुतः एकः शक्रः पुरतो वज्रपाणिः सन् प्रकर्षति—निर्गमयति, आत्मानमिति शेषः, अग्रतः प्रवर्त्तत इत्यर्थः, अत्र च सत्यपि सामानिकादिदेवपरिवारे यदिन्द्रस्य स्वयमेव पञ्चरूपविकुर्वणं तत् त्रिजगद्गुरोः परिपूर्णसेवालिप्सुत्वेनेति। अथ यथा शक्रो विवक्षितस्थानमाप्नोति तथा आह—'तए णं से सक्के'इत्यादि, ततः स शक्रो देवेन्द्रो देवराजा अन्यैर्बहुभिर्भवनपतिवानमन्तरज्योतिष्कवैमानिकैर्देवैर्देवीभिश्च सार्द्धं सम्परिवृतः सर्वर्द्ध्या यावत्करणात् 'सव्वज्जुईए' इत्यादि पदसङ्ग्रहः पूर्वोक्तो ज्ञेयः, तयोत्कृष्टया यावत्करणात् 'तुरिआए'इत्यादिग्रहः व्यतिव्रजन् २ यत्रैव मन्दरपर्वतो यत्रैव च पण्डकवनं यत्रैव चाभिषेकशिला यत्रैव चाभिषेकसिंहासनं तत्रैवोपागच्छति उपागत्य च सिंहासन-

वरगतः पूर्वाभिमुखः सन्निषण्ण इति, पालकविमानं च गृहीतस्वामिकस्य स्वस्वामिनः पादचारित्वेन तमनुव्रजतां देवानामप्यनुपयोगित्वादभिषेकशिलायां यावदनुव्रजदभूदिति सम्भाव्यते । अथेशानेन्द्रावसरः—

तेणं कालेणं तेणं समएणं ईसाणे देविन्दे देवराया सूलपाणी वसभवाहणे सुरिन्दे उत्तरद्धलोगाहिवई अट्ठावीसविमाणवाससयसहस्साहिवई अरयंबरवत्थधरे एवं जहा सक्के इमं णाणत्तं—महाघोसा घण्टा लहुपरक्कमो पायत्ताणियाहिवई पुप्फओ विमाणकारी दक्खिणे निज्जाणमग्गे उत्तरपुरत्थिमिल्लो रइकरपव्वओ मन्दरे समोसरिओ जाव पज्जुवासइत्ति, एवं अवसिट्ठावि इंदा भाणिअव्वा जाव अच्चुओत्ति, इमं णाणत्तं—चउरासीइ असीइ बावत्तरि सत्तरी अ सट्ठी अ । पण्णा चत्तालीसा तीसा वीसा दस सहस्सा ॥ १ ॥ एए सामाणिआणं, बत्तीसट्ठावीसा बारसट्ठ चउरो सयसहस्सा । पण्णा चत्तालीसा छच्च सहस्सारे॥१॥ आणयपाणयकप्पे चत्तारि सयाऽऽरणच्चुए तिण्णि। एए विमाणाणं, इमे जाणविमाणकारी देवा, तंजहा—पालय १ पुप्फे य २ सोमणसे ३ सिरिवच्छे अ ४ णंदिआवत्ते ५। कामगमे ६ पीइगमे ७ मणोरमे ८ विमल ९ सव्वओभद्दे १० ॥ १ ॥ सोहम्मगाणं सणंकुमारगाणं बंभलोअगाणं महासुक्कयाणं पाणयगाणं इंदाणं सुघोसा घण्टा हरिणेगमेसी पायत्ताणीआहिवई उत्तरिल्ला णिज्जाणभूमी दाहिणपुरत्थिमिल्ले रइकरगपव्वए, ईसाणगाणं माहिंदलंतगसहस्सारअच्चुअगाण य इंदाण महाघोसा घण्टा लहुपरक्कमो पायत्ताणीआहिवई दक्खिणिल्ले णिज्जाणमग्गे उत्तरपुरत्थिमिल्ले रइकरगपव्वए, परिसा णं जहा जीवाभिगमे आयरक्खा सामाणिअचउग्गुणा सव्वेसिं जाणविमाणा सव्वेसिं जोअणसयसहस्सविच्छिण्णा उच्चत्तेणं सविमाणप्पमाणा महिंदज्झया सव्वेसिं जोअणसाहस्सिआ, सक्कवज्जा मन्दरे समोअरंति जाव पज्जुवासंतित्ति ( सूत्रं ११८ )

'तेणं कालेण'मित्यादि, तस्मिन् काले सम्भवज्जिनजन्मके तस्मिन् समये—दिक्कुमारीकृत्यानन्तरीये न तु शक्रागमनानन्तरीये सर्वेषामिन्द्राणां जिनकल्याणकेषु युगपदेव समागमनारम्भस्य जायमानत्वात्, यत्तु सूत्रे शक्रागमनानन्तरीयमीशानेन्द्रागमनमुक्तं तत्क्रमेणैव सूत्रबन्धस्य सम्भवात्, ईशानो देवेन्द्रो देवराजा शूलपाणिर्वृषभवाहनः सुरेन्द्र उत्तरार्द्धलोकाधिपतिः, मेरोरुत्तरतोऽस्यैवाधिपत्यात्, अष्टाविंशतिविमानावासशतसहस्राधिपतिः अरजांसि—निर्मलानि अम्बरवस्त्राणि—स्वच्छतयाऽऽकाशकल्पानि वसनानि धरति यः स तथा, एवं यथा शक्रः सौधर्मेन्द्रस्तथाऽयमपि, इदमत्र नानात्वं—विशेषः महाघोषा घण्टा लघुपराक्रमनामा पदात्यनीकाधिपतिः पुष्पकनामा विमानकारी दक्षिणा निर्याणभूमिः उत्तरपौरस्त्यो रतिकरपर्वतः मन्दरे समवसृतः—समागतः यावत्पदात् 'भगवन्तं तित्थयरं तिक्खुत्तो आयाहिणपयाहिणं करेइ २ त्ता वन्दइ णमंसइ वंदित्ता णमंसित्ता णच्चासण्णे णाइदूरे सुस्सूसमाणे णमंसमाणे अभिमुहे विणएणं पंजलिउडे' इति, पर्युपास्ते । अथातिदेशेनावशिष्टानां सनत्कुमारादीन्द्राणां वक्तव्यमाह—'एवं अवसिट्ठावि' इत्यादि, एवं—सौधर्मेशानेन्द्ररीत्या अवशिष्टा अपि इन्द्रा वैमानिकानां भणितव्याः यावदच्युतेन्द्रः— एकादशद्वादशकल्पाधिपतिरिति, अत्र यो विशेषस्तमाह—इदं नानात्वं—भेदः, चतुरशीतिः सहस्राणि शक्रस्य अशीतिः सहस्राणीशानेन्द्रस्य द्विसप्ततिः सहस्राणि सनत्कुमारेन्द्रस्य एवं सप्ततिर्माहेन्द्रस्य चः समुच्चये षष्टिर्ब्रह्मेन्द्रस्य चः प्राग्वत् पञ्चाशल्लान्तकेन्द्रस्य चत्वारिंशच्छुक्रेन्द्रस्य त्रिंशत्सहस्रारेन्द्रस्य विंशतिरानतप्राणतकल्पद्विकेन्द्रस्य दशारणाच्युतकल्पद्विकेन्द्रस्य,

एते संख्याप्रकाराः सामानिकाना देवानां क्रमेण दशकल्पेन्द्रसम्बन्धिनामिति, तेन 'चउरासीए सामाणिअसाहस्सीण'-मित्येतद्विशेषणस्थाने प्रतीन्द्रालापकं असीइए सामाणिअसाहस्सीणमित्यादिअभिलापो ग्राह्यः, तथा सौधर्मेन्द्रकल्पे द्वात्रिंशल्लक्षाणि ईशाने अष्टाविंशतिर्लक्षाणि एवं सनत्कुमारे द्वादश माहेन्द्रे अष्ट ब्रह्मलोके चत्वारि तथा लान्तके पञ्चाशत्सहस्राणि एवं शुक्रे चत्वारिंशत्सहस्राणि चः समुच्चये सहस्रारे षट् सहस्राणि आनतप्राणतकल्पयोर्द्वयोः समुदितयोश्चत्वारि शतानि आरणाच्युतयोस्त्रीणि शतानि एते विमानानां संख्याप्रकाराः, यानविमानविकुर्वकाश्च देवा इमे वक्ष्यमाणाः शक्रादिक्रमेण, तद्यथा—पालकः १ पुष्पकः २ सौमनसः ३ श्रीवत्सः ४ चः समुच्चये नन्दावर्त्तः ५ कामगमः ६ प्रीतिगमः ७ मनोरमः ८ विमलः ९ सर्वतोभद्र १० इति, अथ दशसु कल्पेन्द्रेषु केनचित्प्रकारेण पञ्चानां २ साम्यमाह–सौधर्मकानां–सौधर्मदेवलोकोत्पन्नानां एवमग्रेऽपि ज्ञेयं, तथा सनत्कुमारकाणां ब्रह्मलोककानां महाशुक्रकानां प्राणतकानामिन्द्राणां, बहुवचनं सर्वकालवर्त्तीन्द्रापेक्षया, सुघोषा घण्टा हरिनेगमेषी पदात्यनीकाधिपतिः इति औत्तराहा निर्याणभूमिः दक्षिणपौरस्त्यो रतिकरपर्वतः, तथा ईशानकानां माहेन्द्रलान्तकसहस्राराच्युतकानां च इन्द्राणां महाघोषा घण्टा लघुपराक्रमः पदात्यनीकाधिपतिः दक्षिणो निर्याणमार्गः उत्तरपौरस्त्यो रतिकरपर्वतः, णमिति वाक्यालङ्कारे, पर्षदः–अभ्यन्तरमध्यबाह्यरूपाः यस्य यावद्देवदेवीप्रमाणा भवन्ति तस्य तावत्प्रमाणा यथा जीवाभिगमे तथा ज्ञेयाः; ताश्चैवं शक्रस्याभ्यन्तरिकायां पर्षदि १२ सहस्राणि देवानां मध्यमायां १४ सहस्राणि बाह्यायां १६ सहस्राणि

ईशानेन्द्रस्याद्यायां १० सहस्राणि द्वितीयायां १२ सहस्राणि तृतीयायां १४ सहस्राणि, सनत्कुमारेन्द्रस्याद्यायां ८ सहस्राणि द्वितीयस्यां १० सहस्राणि तृतीयायां १२ सहस्राणि एवं माहेन्द्रस्य क्रमेण ६ सहस्राणि ८ सहस्राणि १० सहस्राणि ब्रह्मेन्द्रस्य ४–६–८ सहस्राणि लान्तकेन्द्रस्य २–४–६ सहस्राणि शुक्रेन्द्रस्य १–२–४ सहस्राणि सहस्रारेन्द्रस्य ५०० शतानि १० शतानि २० शतानि आनतप्राणतेन्द्रस्य २ शते सार्द्धे ५ शतानि १० शतानि आरणाच्युतेन्द्रस्य १ शतं २ शते सार्द्धे ५०० शतानि, इमाश्च तत्तदिन्द्रवर्णके 'तिण्हं परिसाण'मित्याद्यालापके यथासंख्यं भाव्याः, शक्रेशानयोर्देवीपर्षत्त्रयं जीवाभिगमादिषूक्तमपि श्रीमलयगिरिपादैः स्वावश्यकवृत्तौ जम्बूद्वीपप्रज्ञप्तिमध्यगतोऽयमितिलिख्यमानजिनजन्माभिषेकमहग्रन्थे नोक्तमिति मया तदनुयायित्वेन नालेखि, आत्मरक्षाः–अङ्गरक्षका देवाः सर्वेषामिन्द्राणां स्वस्वसामानिकेभ्यश्चतुर्गुणाः, एते चेत्थं वर्णके अभिलाप्याः 'चउण्हं चउरासीणं आयरक्खदेवसाहस्सीणं चउण्हं असीईणं आयरक्खदेवसाहस्सीणं चउण्हं बावत्तरीणं आयरक्खदेवसाहस्सीणं आहेवच्चं' इत्यादि, तथा यानविमानानि सर्वेषां योजनशतसहस्रविस्तीर्णानि उच्चत्वेन स्वविमानप्रमाणानि–इन्द्रस्य स्वस्वविमानं सौधर्मावतंसकादि तस्यैव प्रमाणं पञ्चशतयोजनादिकं येषां तानि तथा, अस्यायमर्थः–आद्यकल्पद्विकविमानानामुच्चत्वं पञ्चयोजनशतानि द्वितीये द्विके षट् योजनशतानि तथा तृतीये द्विके सप्त तथा चतुर्थे द्विकेऽष्टौ ततोऽग्रेतने कल्पचतुष्के विमानानामुच्चत्वं नव योजनश-

तानि, तथा सर्वेषा महेन्द्रध्वजाः योजनसाहस्रिकाः–सहस्रयोजनविस्तीर्णा शक्रवर्ज्या मन्दरे समवसरन्ति यावत्पर्यु-पासते यावत्पदसंग्रहः प्राग्वत् । अथ भवनवासिनः—

तेणं कालेणं तेणं समएणं चमरे असुरिन्दे असुरराया चमरचञ्चाए रायहाणीए सभाए सुहम्माए चमरंसि सीहासणंसि चउसट्ठीए सामाणिअसाहस्सीहिं तायत्तीसाए तायत्तीसेहिं चउहिं लोगपालेहिं पञ्चहिं अग्गमहिसीहिं सपरिवाराहिं तिहिं परिसाहिं सत्तहिं अणिएहिं सत्तहिं अणियाहिवईहिं चउहिं चउसट्ठीहिं आयरक्खसाहस्सीहिं अण्णेहि अ जहा सक्के णवरं इमं णाणत्तं–दुमो पाय-त्ताणीआहिवई ओघस्सरा घण्टा विमाणं पण्णासं जोअणसहस्साइं महिन्दज्झओ पञ्चजोअणसयाइं विमाणकारी आभिओगिओ देवो अवसिट्ठं तं चेव जाव मन्दरे समोसरइ पज्जुवासईति । तेणं कालेणं तेणं समएणं बली असुरिन्दे असुरराया एवमेव णवरं सट्ठी सामाणीअसाहस्सीओ चउगुणा आयरक्खा महादुमो पायत्ताणीआहिवई महाओहस्सरा घण्टा सेसं तं चेव परिसाओ जहा जीवाभिगमे इति । तेणं कालेणं तेणं समएणं धरणे तहेव णाणत्तं छ सामाणिअसाहस्सीओ छ अग्गमहिओ चउग्गुणा आय-रक्खा मेघस्सरा घण्टा भद्दसेणो पायत्ताणीयाहिवई विमाणं पणवीसं जोअणसहस्साइं महिंदज्झओ अद्धाइज्जाइं जोअणसयाइं एवमसुरिन्दवज्जिआणं भवणवासिइंदाणं, णवरं असुराणं ओघस्सरा घण्टा णागाणं मेघस्सरा सुवण्णाणं हंसस्सरा विज्जूणं कोंच-स्सरा अग्गीणं मंजुस्सरा दिसाणं मंजुघोसा उदहीणं सुस्सरा दीवाणं महुरस्सरा वाऊणं णंदिस्सरा थणिआणं णंदिघोसा, चउसट्ठी सट्ठी खलु छच्च सहस्सा उ असुरवज्जाणं । सामाणिआ उ एए चउग्गुणा आयरक्खा उ ॥ १ ॥ दाहिणिल्लाणं पायत्ताणीआहिवई भद्दसेणो उत्तरिल्लाणं दक्खोत्ति । वाणमन्तरजोइसिआ णेअव्वा, एवं चेव, णवरं चत्तारि सामाणिअसाहस्सीओ चत्तारि अग्ग-महिसीओ सोलस आयरक्खसहस्सा विमाणा सहस्सं महिन्दज्झया पणवीसं जोअणसयं घण्टा दाहिणाणं मंजुस्सरा उत्तराणं मंजुघोसा पायत्ताणीआहिवई विमाणकारी अ आभिओगा देवा जोइसिआणं सुस्सरा सुस्सरणिग्घोसाओ घण्टाओ मन्दरे समो-सरणं जाव पज्जुवासंतित्ति ( सूत्रं ११९ )

'तेणं कालेणं तेणं समएण'मित्यादि प्राग्वत्, चमरोऽसुरेन्द्रोऽसुरराजा चमरचञ्चायां राजधान्यां सभायां सुधर्मायां चमरे सिंहासने चतुःषष्ट्या सामानिकसहस्रैः त्रयस्त्रिंशता त्रायस्त्रिंशैः चतुर्भिः लोकपालैः पञ्चभिरग्रमहिषीभिः सपरिवारा-भिः तिसृभिः पर्षद्भिः सप्तभिरनीकैः सप्तभिरनीकाधिपतिभिः चतसृभिः चतुःषष्टिभिरात्मरक्षकसहस्रैः अन्यैश्चेत्यालापकां-शेन सम्पूर्ण आलापकस्त्वयं बोध्यः–'चमरचञ्चारायहाणीवत्थवेहिं बहूहिं असुरकुमारेहिं देवेहि अ देवीहि अ'त्ति, यथा शक्रस्तथाऽयमप्यवगम्यः, नवरमिदं नानात्वं–भेदः, द्रुमः पदात्यनीकाधिपतिः ओघस्वरा घण्टा यानविमानं पञ्चा-शद् योजनसहस्राणि विस्तारायामं महेन्द्रध्वजः पञ्चयोजनशतान्युच्चः विमानकृदाभियोगिको देवो न पुनर्वैमानिकेन्द्राणां पालकादिरिव नियतनामकः अवशिष्टं तदेव–शक्राधिकारोक्तं वाच्यं नवरं दक्षिणपश्चिमो रतिकरपर्वतः, कियद्दूर-मित्याह—यावन्मन्दरे समवसरति पर्युपास्त इति । अथ बलीन्द्रः–'तेणं कालेण'मित्यादि, तस्मिन् काले तस्मिन् समये बलिरसुरेन्द्रोऽसुरराजा एवमेवेति—चमर इव नवरं षष्टिः सामानिकसहस्राणि चतुर्गुणा आत्मरक्षाः, सामानि-

॥४०७॥

कसंख्यातश्चतुर्गुणसंख्याङ्काः आत्मरक्षका इत्यर्थः, महाद्रुमः पदात्यनीकाधिपतिः महौघस्वरा घण्टा 'व्याख्यातोऽधिकं प्रतिपद्यत' इति चमरचञ्चास्थाने बलिचञ्चा दाक्षिणात्यो निर्याणमार्गः उत्तरपश्चिमो रतिकरपर्वत इति, शेषं—यानविमानविस्तारादिकं तदेव—चमरचञ्चाधिकारोक्तमेव, पर्षदो यथा जीवाभिगमे, इदं च सूत्रं देहलीप्रदीपन्यायेन सम्बन्धनीयं, यथा देहलीस्थो दीपोऽन्तःस्थदेहलीस्थबाह्यस्थवस्तुप्रकाशनोपयोगी तथेदमप्युक्ते चमराधिकारे उच्यमाने बलीन्द्राधिकारे वक्ष्यमाणेष्वष्टसु भवनपतिषूपयोगी भवति, त्रिष्वप्यधिकारेषु पर्षदो वाच्या इत्यर्थः, तथाहि——चमरस्याभ्यन्तरिकायां पर्षदि २४ सहस्राणि देवानां मध्यमायां २८ सहस्राणि बाह्यायां च ३२ सहस्राणि, तथा बलीन्द्रस्याभ्यन्तरिकायां पर्षदि २० सहस्राणि मध्यमायां २४ सहस्राणि बाह्यायां २८ सहस्राणि, तथा धरणेन्द्रस्याभ्यन्तरिकायां पर्षदि ६० सहस्राणि मध्यमायां ७० सहस्राणि बाह्यायां ८० सहस्राणि, भूतानन्दस्याभ्यन्तरिकायां पर्षदि ५० सहस्राणि मध्यमायां ६० सहस्राणि बाह्यायां ७० सहस्राणि, अवशिष्टानां भवनवासिषोडशेन्द्राणां मध्ये ये वेणुदेवादयो दक्षिणश्रेणिपतयस्तेषां पर्षत्त्रयं धरणेन्द्रस्येव उत्तरश्रेण्यधिपानां वेणुदालिप्रमुखाणां भूतानन्दस्येव ज्ञेयम्। अथ धरणः-'तेणं कालेण'मित्यादि, तस्मिन् काले तस्मिन् समये धरणस्तथैव—चमरवत् नवरमिदं नानात्वं—भेदः षट् सामानिकसहस्राणां षडग्रमहिष्यः चतुर्गुणा आत्मरक्षकाः मेघस्वरा घण्टा भद्रसेनः पदात्यनीकाधिपतिः विमानं पञ्चविंशतियोजनसहस्राणि महेन्द्रध्वजोऽर्द्धतृतीयानि योजनशतानि, अथावशिष्टभवनवासीन्द्रवक्तव्यतामस्यातिदेशेनाह——'एवमसुरिन्द'इत्यादि, एवं—धरणेन्द्रन्यायेनासुरेन्द्रौ—चमरबलीन्द्रौ ताभ्यां वर्जितानां भवनवासीन्द्राणां भूतानन्दादीनां वक्तव्यं बोध्यं, नवरं असुराणां—असुरकुमाराणां ओघस्वरा घण्टा नागानां—नागकुमाराणां मेघस्वरा घण्टा सुपर्णानां—गरुडकुमाराणां हंसस्वरा विद्युत्कुमाराणां क्रौञ्चस्वरा अग्निकुमाराणां मंजुस्वरा दिक्कुमाराणां मंजुघोषा उदधिकुमाराणां सुस्वरा द्वीपकुमाराणां मधुरस्वरा वायुकुमाराणां नन्दिस्वरा स्तनितकुमाराणां नन्दिघोषा, एषामेवोक्तानुक्तसामानिकसंङ्ग्रहार्थं गाथामाह—चतुष्षष्टिश्चमरेन्द्रस्य षष्टिर्बलीन्द्रस्य खलुर्निश्चये षट् च सहस्राणि असुरवर्जानां धरणेन्द्रादीनामष्टादशभवनवासीन्द्राणां सामानिकाः चः समुच्चये तथा पुनरर्थे भिन्नक्रमे तेनैते सामानिकाः चतुर्गुणाः पुनरात्मरक्षका भवन्ति, दाक्षिणात्यानां चमरेन्द्रवर्जितानां भवनपतीन्द्राणां भद्रसेनः पदात्यनीकाधिपतिः औत्तराहाणां बलिवर्जितानां दक्षो नाम्ना पदातिपतिः, यच्चात्र घण्टादिकं पूर्वं स्वस्वसूत्रे उक्तमप्युक्तं तत्समुदायवाक्ये सर्वसङ्ग्रहार्थमिति। अथ व्यन्तरेन्द्रज्योतिष्केन्द्राः—'वाणमंतर' इत्यादि, व्यन्तरेन्द्रा ज्योतिष्केन्द्राश्च नेतव्याः—शिष्यबुद्धिं प्रापणीयाः एवमेव, यथा भवनवासिनस्तथैवेत्यर्थः, नवरं चत्वारि सामानिकानां सहस्राणि चतस्रोऽग्रमहिष्यः षोडश आत्मरक्षकसहस्रा विमानानि योजनसहस्रमायामविष्कम्भाभ्यां महेन्द्रध्वजः पञ्चविंशत्यधिकयोजनशतं घण्टाश्च दाक्षिणात्यानां मञ्जुस्वरा औत्तराहाणां मञ्जुघोषाः, पदात्यनीकाधिपतयो विमानकारिणश्च आभियोगिका देवाः, कोऽर्थः?—स्वाम्यादिष्टा हि आभियोगिका देवा घण्टावादनादिकर्मणि विमानविकुर्वणे च प्रवर्त्तन्ते न पुनर्हरिनिगमैषिवत्पालकवच्च निर्दिष्टनामका इति, 'व्याख्या विशेषप्रति-

पादिनी'तिसूत्रेऽनुक्तमपीदं बोध्यं—सर्वेषामभ्यन्तरिकायां पर्षदि देवानां ८ सहस्राणि मध्यमाया १० सहस्राणि बाह्या-यां १२ सहस्राणीति, एतेषामुल्लेखस्त्वयम्—'तेणं कालेणं तेणं समएणं काले णामं पिसाइंदे पिसायराया चउहिं सामा-णिअसाहस्सीहिं चउहिं अग्गमहिसीहिं सपरिवाराहिं तिहिं परिसाहिं सत्तहिं अणीएहिं सत्तहिं अणीआहिवइहिं सोलसहिं आयरक्खदेवसाहस्सीहिं' 'तं चेव, एवं सव्वेवी'ति, व्यन्तरा इव ज्योतिष्का अपि ज्ञेयाः, सेन सामानिकादिसङ्ख्यासु न विशेषः, घण्टासु चायं विशेषः—चन्द्राणां सुस्वरा सूर्याणां सुस्वरनिर्घोषा, सर्वेषां च मंदरे समवरणं वाच्यं यावत्पर्युपा-सते, यावच्छब्दग्राह्यं तु प्राग्दर्शितं ततो ज्ञेयं, एतदुल्लेखस्त्वयं—'तेणं कालेणं तेणं समएणं चंदा जोइसिंदा जोइसरायाणो पत्तेअं पत्तेअं चउहिं सामाणिअसाहस्सीहिं चउहिं अग्गमहिसीहिं तिहिं परिसाहिं सत्तहिं अणिएहिं सत्तहिं अणिआहिव-इहिं सोलसहिं आयरक्खदेवसाहस्सीहिं, एवं जहा वाणमंतरा एवं सूरावि' नन्वत्रोल्लेखे चन्द्राः सूर्या इत्यत्र बहुवचनं किमर्थम् ?, प्रस्तुतकर्मणि एकस्यैव सूर्यस्य चन्द्रस्य चाधिकृतत्वात् अन्यथेन्द्राणां चतुःषष्टिसङ्ख्याकत्वव्याघातात् ?, उच्यते, जिनकल्याणकादिषु दश कल्पेन्द्रा विंशतिर्भवनवासीन्द्राः द्वात्रिंशद्व्यन्तरेन्द्राः एते व्यक्तितः चन्द्रसूर्यौ तु जात्यपेक्षया तेन चन्द्राः सूर्या असङ्ख्याता अपि समायान्ति, के नाम न कामयन्ते भुवनभट्टारकाणां दर्शनं स्वदर्शनं पुपूषवः?, यदुक्तं शान्तिचरित्रे श्रीमुनिदेवसूरिकृते श्रीशान्तिदेवजन्ममहवर्णने—"ज्योतिष्कनायकौ पुष्पदन्तौ सङ्ख्या-तिगाविति । हेमाद्रिमाद्रियन्ते स्म, चतुःषष्टिः सुरेश्वराः ॥ १ ॥" अथामीषां प्रस्तुतकर्मणीतिवक्तव्यतामाह—

तए णं से अच्चुए देविन्दे देवराया महं देवाहिवे आभिओगे देवे सद्दावेइ २ त्ता एवं वयासी—खिप्पामेव भो देवाणुप्पिआ ! महत्थं महग्घं महारिहं विउलं तित्थयराभिसेअं उवट्ठवेह, तए णं ते अभिओगा देवा हट्ठतुट्ठ जाव पडिसुणित्ता उत्तरपुरत्थिमं दिसीभागं अवक्कमन्ति २ त्ता वेउव्विअसमुग्घाएणं जाव समोहणित्ता अट्ठसहस्सं सोवण्णिअकलसाणं एवं रुप्पमयाणं मणिमयाणं सुवण्णरुप्पमयाणं सुवण्णमणिमयाणं रुप्पमणिमयाणं सुवण्णरुप्पमणिमयाणं अट्ठसहस्सं भोमिज्जाणं अट्ठसहस्सं चन्दणकलसाणं एवं भिंगाराणं आयंसाणं थालाणं पाईणं सुपइट्ठगाणं चित्ताणं रयणकरंडगाणं वायकरगाणं पुप्फचंगेरीणं, एवं जहा सूरिआभस्स सव्व-चंगेरीओ सव्वपडलगाइं विसेसिअतराइं भाणिअव्वाइं, सीहासणछत्तचामरतेल्लसमुग्ग जाव सरिसवसमुग्गा तालिअंटा जाव अट्ठसहस्सं कडुच्छुगाणं विउव्वंति विउव्वित्ता साहाविए विउव्विए अ कलसे जाव कडुच्छुए अ गिण्हित्ता जेणेव खीरोदए समुद्दे तेणेव आगम्म खीरोदगं गिण्हन्ति २ त्ता जाइं तत्थ उप्पलाइं पउमाइं जाव सहस्सपत्ताइं ताइं गिण्हंति, एवं पुक्खरो-दाओ जाव भरहेरवयाणं मागहाइतित्थाणं उदगं मट्टिअं च गिण्हन्ति २ त्ता एवं गंगाईणं महाणईणं जाव चुल्लहिमवन्ताओ सव्वतुअरे सव्वपुप्फे सव्वगन्धे सव्वमल्ले जाव सव्वोसहीओ सिद्धत्थए य गिण्हन्ति २ त्ता पउमद्दहाओ दहोअगं उप्पलादीणि अ, एवं सव्वकुलपव्वएसु वट्टवेअद्धेसु सव्वमहद्दहेसु सव्ववासेसु सव्वचक्कवट्टिविजएसु वक्खारपव्वएसु अंतरणईसु विभासिज्जा जाव उत्तरकुरुसु जाव सुदंसणभद्दसालवणे सव्वतुअरे जाव सिद्धत्थए अ गिण्हन्ति, एवं णन्दणवणाओ सव्वतुअरे जाव सिद्धत्थए अ सरसं च गोसीसचन्दणं दिव्वं च सुमणदामं गेण्हन्ति, एवं सोमणसपंडगवणाओ अ सव्वतुअरे जाव सुमणसदामं दद्दरमलय-

सुगन्धे य गिण्हन्ति २ त्ता एगओ मिलंति २ त्ता जेणेव सामी तेणेव उवागच्छन्ति २ त्ता महत्थं जाव तित्थयराभिसेअं उवट्ठवेंतित्ति ( सूत्रं १२० )

'तए ण'मित्यादि, ततः सोऽच्युतो यः प्रागभिहितो देवेन्द्रो देवराजा महान् देवाधिपो महेन्द्रः चतुःषष्टावपि इन्द्रेषु लब्धप्रतिष्ठोऽत एवास्य प्रथमोऽभिषेक इति, आभियोग्यान् देवान् शब्दयति शब्दयित्वा च एवमवादीत्, यदवादीत्तदाह–क्षिप्रमेव भो देवानुप्रियाः! महार्थं महार्हं विपुलं तीर्थकराभिषेकमुपस्थापयत, अत्र महार्थादिपदानि प्राग्भरतराज्याधिकारे वर्णितानि, वाक्ययोजना तु सुलभा, अथ यथा ते चक्रुस्तथाऽऽह–'तए ण'मित्यादि, ततस्ते आभियोगिका देवा हृष्टतुष्टयावत् प्रतिश्रुत्य उत्तरपौरस्त्यं दिग्भागमपक्रामन्ति अपक्रम्य च वैक्रियसमुद्घातेन यावत्पदात् 'समोहणंति'त्ति ग्राह्यं समवहत्य चाष्टसहस्रं–अष्टोत्तरं सहस्रं सौवर्णिककलशानां विकुर्वन्तीति सम्बन्धः, एवं अष्टसहस्रं रूप्यमयानां मणिमयानां सुवर्णरूप्यमयानां सुवर्णमणिमयानां रूप्यमणिमयानां सुवर्णरूप्यमणिमयानां अष्टसहस्रं भौमेयकानां मृन्मयानामित्यर्थः अष्टसहस्रं वन्दनकलशानां–मङ्गल्यघटानां एवं भृङ्गाराणां आदर्शानां स्थालीनां पात्रीणां सुप्रतिष्ठकानां चित्राणां रत्नकरण्डकानां वातकरकाणां–बहिश्चित्रितानां मध्ये जलशून्यानां करकाणां पुष्पचङ्गेरीणामष्टसहस्रं, एवमुक्तन्यायेन यथा सूर्याभस्य राजप्रश्नीये इन्द्राभिषेकसमये सर्वचङ्गेर्यस्तथाऽत्र वाच्याः 'अट्ठसहस्सं आभरणचङ्गेरीणं लोमहत्थचङ्गेरीण'मिति, तथा सर्वपटलकानि वाच्यानि, तथाहि–अष्टसहस्रं पुष्पपटलकानां, इमानि वस्तूनि सूर्याभाभिषेकोपयोगवस्तुभिः सङ्ख्ययैव तुल्यानि नतु गुणेनेत्याह–विशेषिततराणि–अतिविशिष्टानि भणितव्यानि–वाच्यानि, प्रथमकल्पीयदेवविकुर्वणातोऽच्युतकल्पदेवविकुर्वणाया अधिकतरत्वात्, तथा सिंहासनच्छत्रचामरतिलसमुद्गकयावत्सर्षपसमुद्गकः, अत्र यावत्पदात् कोष्ठसमुद्गकादयो वाच्याः, एषां च व्याख्या प्राग्वत्, तालवृन्तानि यावत्करणात् व्यजनानीति ग्रहः, तत्र व्यजनानीति सामान्यतो वातोपकरणानि तालवृंतानि तद्विशेषरूपाणि, एषामष्टसहस्रमष्टसहस्रमिति, अष्टसहस्रं धूपकडुच्छुकानामिति। अथ विकुर्वणायाः सार्थकत्वमाह–'विउव्वित्ता' इत्यादि, विकुर्वित्वा च स्वाभाविकान्–देवलोके देवलोकवत् स्वयंसिद्धान् शाश्वतान् वैक्रियांश्च–अनन्तरोक्तान् सौवर्णादिकान् यावच्छब्दात् भृङ्गारादयो व्यजनान्ता ग्राह्याः, धूपकडुच्छुकांश्च सूत्रे साक्षादुपात्तान्, गृहीत्वा च यत्रैव क्षीरोदः समुद्रः तत्रैवागत्य क्षीरोदकं–क्षीररूपमुदकं गृह्णन्ति, ननु मेरुतोऽभिषेकाङ्गभूतवस्तुग्रहणाय चलन्तस्ते देवास्तद्ग्रहणोपयोगि वस्तुजातं कलशभृङ्गरादिकं गृह्णन्तु परं तदनुपयोगि यावच्छब्दोदरप्रविष्टं सिंहासनचामरादिकं तैलसमुद्गकादिकं च कथं गृह्णन्तीति चेदुच्यते, विकुर्वणासूत्रस्यातिदेशेन ग्रहणसूत्रस्यातिदिष्टत्वादेतत्सूत्रपाठस्यान्तर्गतत्वेऽपि ये ग्रहणोचितास्ते एव गृहीता इति बोध्यं, योग्यतावशादेवार्थप्रतिपत्तेः, यच्च धूपकडुच्छुकानां तत्र ग्रहणं तत्कलशभृङ्गारादिदेवहस्तधूपनार्थमिति, अन्यथा सूत्रे साक्षादुपदर्शितस्य धूपकडुच्छुकानां ग्रहणस्य नैरर्थक्यापत्तेः, अथ प्रस्तुतसूत्रं–गृहीत्वा च यानि तत्र क्षीरोदे उत्पलानि पद्मानि यावत्सहस्रपत्राणि तानि गृह्णन्ति यावत्पदात् कुमुदादिग्रहः, एवमनया रीत्या पुष्क-

रोदात्–तृतीयसमुद्रात् उदकादिकं गृह्णन्ति, यत्तु क्षीरोदाद्विनिवृत्तैर्वारुणीवरमन्तरा मुक्त्वा पुष्करोदे जलं गृहीतं तद्वारुणीवरवारिणोऽग्राह्यत्वादिति सम्भाव्यते, यावच्छब्दात् समयखित्ते इति ग्राह्यं, तेन समयक्षेत्रे—मनुष्यक्षेत्रे भरतैरावतयोः प्रस्तावात् पुष्करवरद्वीपार्द्धसत्कयोः मागधादीनां तीर्थानामुदकं मृत्तिकां च गृह्णन्ति, 'एव'मिति समयक्षेत्रस्थपुष्करवरद्वीपार्द्धसत्कानां गङ्गादीनां महानदीनां आदिशब्दात् सर्वमहानदीग्रहः यावत्पदात् उदकमुभयतटमृत्तिकां गृह्णन्ति, क्षुद्रहिमवतः सर्वान् तुवरान्–कषायद्रव्याणि आमलकादीनि सर्वाणि जातिभेदेन पुष्पाणि सर्वान् गन्धान्–वासादीन् सर्वाणि माल्यानि–ग्रथितादिभेदभिन्नानि सर्वा महौषधीः–राजहंसीप्रमुखाः सिद्धार्थकांश्च–सर्षपान् गृह्णन्ति २ त्वा च पद्मद्रहाद् द्रहोदकमुत्पलादीनि च गृह्णन्ति, एवं क्षुद्रहिमवन्न्यायेन सर्वक्षेत्रव्यवस्थाकारित्वेन कुलकल्पाः पर्वताः मध्यपदलोपे कुलपर्वता हिमाचलादयस्तेषु वृत्तवैताढ्येषु सर्वमहाद्रहेषु–पद्मद्रहादिषु सर्ववर्षेषु–भरतादिषु सर्वचक्रवर्त्तिविजयेषु–कच्छादिषु वक्षस्कारपर्वतेषु–गजदन्ताकृतिषु माल्यवदादिषु सरलाकृतिषु च चित्रकूटादिषु तथा अन्तरनदीषु–ग्राहावत्यादिषु विभाषेत–वदेत्, पर्वतेषु तु तुवरादीनां द्रहेषु उत्पलादीनां कर्मक्षेत्रेषु मागधादितीर्थोदकमृदां नदीषूदकोभयतटमृदां ग्रहणं वक्तव्यमित्यर्थः, यावत्पदात् देवकुरुपरिग्रहस्तेन कुरुद्वये चित्रविचित्रगिरियमकगिरिकाञ्चनगिरिह्रददशकेषु यथासम्भवं वस्तुजातं गृह्णन्ति, यावत्पदात् पुष्करवरद्वीपार्द्धस्य पूर्वापरार्द्धयोर्भरतादिस्थानेषु वस्तुग्रहो वाच्यः, ततो जम्बूद्वीपेऽपि तद्ग्रहस्तथैव वाच्यः, कियत्पर्यन्तमित्याह–सुदर्शने पूर्वार्धमेरौ भद्रशालवने नन्दनवने सौमनसवने पण्डकवने च सर्वतुवरान् गृह्णन्ति तथा तस्यैवापरार्धे अनेनैव क्रमेण वस्तुजातं गृह्णन्ति, ततो धातकीखण्डजम्बूद्वीपगतो मेरुस्तस्य भद्रशालवने सर्वतुवरान् यावत् सिद्धार्थकांश्च गृह्णन्ति, एवमस्यैव नन्दनवनात् सर्वतुवरान् यावत्सिद्धार्थकांश्च सरसं च गोशीर्षचन्दनं दिव्यं च सुमनोदाम–ग्रथितपुष्पाणि गृह्णन्ति, एवं सौमनसवनात् सूत्रपाठे पञ्चमीलोपः प्राकृतत्वात् पण्डकवनाच्च सर्वतुवरान् यावत् सुमनोदामदर्दरमलयसुगन्धिकान् गन्धान्, दर्दरमलयौ चन्दनोत्पत्तिखानिभूतौ पर्वतौ तेन तदुद्भवं चन्दनमपि 'तात्स्थ्यात् तद्व्यपदेश' इति न्यायेन दर्दरमलयशब्दाभ्यामभिधीयते, ततो दर्दरमलयनामके चन्दने तयोः सुगन्धः–परमगन्धो यत्र तान् दर्दरमलयसुगन्धिकान् गन्धान्–वासान् गृह्णन्ति, गृहीत्वा च इतस्ततो विप्रकीर्णा आभियोग्यदेवा एकत्र मिलन्ति मिलित्वा च यत्रैव स्वामी तत्रैवोपागच्छन्ति उपागत्य च तं महार्थं यावच्छब्दात् महार्घं महार्हं विपुलमिति पदत्रयी तीर्थकराभिषेकं तीर्थकराभिषेकयोग्यं क्षीरोदकाद्युपस्करमुपस्थापयन्ति–उपनयन्ति, अच्युतेन्द्रस्य समीपस्थितं कुर्वन्तीत्यर्थः। अथाच्युतेन्द्रो यदकरोत्तदाह–

तए णं से अच्चुए देविन्दे दसहिं सामाणिअसाहस्सीहिं तायत्तीसाए तायत्तीसएहिं चउहिं लोगपालेहिं तिहिं परिसाहिं सत्तहिं अणिएहिं सत्तहिं अणिआहिवईहिं चत्तालीसाए आयरक्खदेवसाहस्सीहिं सद्धिं संपरिवुडे तेहिं साभाविएहिं विउव्विएहि अ वरकमलपइट्ठाणेहिं सुरभिवरवारिपडिपुण्णेहिं चन्दणकयचच्चाएहिं आविद्धकण्ठेगुणेहिं पउमुप्पलपिहाणेहिं करयलसुकुमारपरिग्गहिएहिं अट्ठसहस्सेणं सोवण्णिआणं कलसाणं जाव अट्ठसहस्सेणं भोमेज्जाणं जाव सव्वोदएहिं सव्वमट्टिआहिं सव्वतुअरेहिं जाव

सव्वोसहिसिद्धत्थएहिं सव्विड्डीए जाव रवेणं महया २ तित्थयराभिसेएणं अभिसिंचंति, तए णं सामिस्स महया २ अभिसेअंसि वट्टमाणंसि इंदाईआ देवा छत्तचामरधूवकडुच्छुअपुप्फगन्धजावहत्थगया हट्ठतुट्ठ जाव वज्जसूलपाणी पुरओ चिट्ठंति पंजलिउडा इति, एवं विजयाणुसारेण जाव अप्पेगइआ देवा आसिअसंमज्जिओवलित्तसित्तसुइसम्मट्ठरत्थंतरावणवीहिअं करेन्ति जाव गन्धवट्टिभूअंति, अप्पेग० हिरण्णवासं वासिंति एवं सुवण्णरयणवइरआभरणपत्तपुप्फफलबीअमल्लगन्धवण्ण जाव चुण्णवासं वासंति, अप्पेगइआ हिरण्णविहिं भाइंति एवं जाव चुण्णविधिं भाइंति, अप्पेगइआ चउव्विहं वज्जं वाएन्ति तंजहा–ततं १ विततं २ घणं ३ झुसिरं ४, अप्पेगइआ चउव्विहं गेअं गायन्ति, तंजहा–उक्खित्तं १ पायत्तं २ मन्दायईयं ३ रोइआवसाणं ४, अप्पेगइआ चउव्विहं णट्टं णच्चन्ति, तं०–अंचिअं १ दुअं २ आरभडं ३ भसोलं ४, अप्पेगइआ चउव्विहं अभिणयं अभिणेंति, तं०–दिट्ठंतिअं पाडिस्सुइअं सामण्णोवणिवाइअं लोगमज्झावसाणिअं, अप्पेग० बत्तीसइविहं दिव्वं णट्टविहिं उवदंसेन्ति, अप्पेगइआ उप्पयनिवयं निवयउप्पयं संकुचिअपसारिअं जाव भन्तसंभन्तणामं दिव्वं नट्टविहिं उवदंसन्तीति, अप्पेगइआ तंडवेंति अप्पेगइआ लासेन्ति अप्पेगइआ पीणेन्ति, एवं बुक्कारेन्ति अप्फोडेन्ति वग्गन्ति सीहणायं णदन्ति अप्पे० सव्वाइं करेन्ति अप्पे० हयहेसिअं एवं हत्थिगुलगुलाइअं रहघणघणाइअं अप्पे० तिण्णिवि, अप्पे० उच्छोलन्ति अप्पे० पच्छोलन्ति अप्पे० तिवइं छिंदन्ति पायदद्दरयं करेन्ति भूमिचवेडे दलयन्ति अप्पे० महया सद्देणं रावेंति एवं संजोगा विभासिअव्वा, अप्पे० हक्कारेन्ति, एवं पुक्कारेन्ति वक्कारेन्ति ओवयंति उप्पयंति परिवयंति जलन्ति तवंति पयवंति गज्जंति विज्जुआयंति वासिंति अप्पेगइआ देवुक्कलिअं करेंति एवं



देवकहकहगं करेंति अप्पे० दुहुदुहुगं करेंति अप्पे० विकिअभूयाइं रूवाइं विउव्वित्ता पणच्चंति एवमाइ विभासेज्जा जहा विजयस्स जाव सव्वओ समन्ता आहावेंति परिधावेंतित्ति। ( सूत्रं १२१ )

'तए णं से अच्चुए' इत्यादि, ततः उपस्थितायामभिषेकसामग्र्यां सोऽच्युतो देवेन्द्रो दशभिः सामानिकसहस्रैः त्रयस्त्रिंशता त्रायस्त्रिंशकैः चतुर्भिर्लोकपालैः तिसृभिः पर्षद्भिः सप्तभिरनीकैः सप्तभिरनीकाधिपतिभिः चत्वारिंशता आत्मरक्षकदेवसहस्रैः सार्द्धं संपरिवृतस्तैस्तद्गतदेवजनप्रसिद्धैः स्वाभाविकैर्वैक्रियैश्च वरकमलप्रतिष्ठानैरित्यादि सर्वं प्राग्वत्, सुकुमालकरतलपरिगृहीतैरनेकसहस्रसङ्ख्याकैः कलशैरिति गम्यते, तानेव विभागतो दर्शयति–अष्टसहस्रेण सौवर्णिकानां कलशानां यावत्पदादष्टसहस्रै रौप्याणामष्टसहस्रेण मणिमयानामष्टसहस्रेण सुवर्णरूप्यमयानामष्टसहस्रेण सुवर्णमणिमयानामष्टसहस्रेण रूप्यमणिमयानामष्टसहस्रेण सुवर्णरूप्यमणिमयानामिति अष्टसहस्रेण भौमेयानां सर्वसङ्ख्यया अष्टभिः सहस्रैः चतुःषष्ठ्यधिकैर्यावच्छब्दात् भृङ्गारादिपरिग्रहः सर्वोदकैः सर्वमृत्तिकाभिः सर्वतुवरैर्यावच्छब्दात् पुष्पादिग्रहः, सर्वौषधिसिद्धार्थकैः सर्वर्द्ध्या यावद्रवेण यावच्छब्दात् 'सव्वजुईए इत्यारभ्य दुंदुहिनिग्घोसनाइअ' इत्यन्तं ग्राह्यं, महता २ तीर्थकराभिषेकेण, अत्र करणे तृतीया, कोऽर्थः ?–येनाभिषेकेण तीर्थकरा अभिषिच्यन्ते तेनेत्यर्थः, अत्राभिषेकशब्देनाभिषेकोपयोगि क्षीरोदादिजलं ज्ञेयम्, अभिषिञ्चति–अभिषेकं करोतीत्यर्थः। सम्प्रत्यभिषेककारिण इन्द्रादपरे इन्द्रादयो यच्चक्रुस्तदाह—'तए ण'मित्यादि, ततः स्वामिनोऽतिशयेन महत्यभिषेके वर्त्तमाने इन्द्रादिका

देवाः छत्रचामरकलशधूपकडुच्छुकपुष्पगन्धयावत्पदात् माल्यचूर्णादिपरिग्रहः, हस्तगताः हृष्टतुष्टयावत्पदादानन्दालापको ग्राह्यः, वज्रशूलपाणयः उपलक्षणादन्यशस्त्रपाणयोऽपि भाव्याः पुरतस्तिष्ठन्ति, अयमर्थः—केचन छत्रधारिणः केचन चामरोत्क्षेपकाः केचन कलशधारिण इत्यादि, सेवाधर्मसत्यापनार्थं न तु वैरिनिग्रहार्थं तत्र वैरिणामभावात्, केचन वज्रपाणयः, केचन शूलपाणय इति, केचन छत्राद्यव्यग्रपाणयः प्राञ्जलिकृतास्तिष्ठन्ति, अत्रातिदेशमाह—'एवं विजया' इत्यादि, एवमुक्तप्रकारमभिषेकसूत्रं विजयदेवाभिषेकसूत्रानुसारेण ज्ञेयं, यावत्पदात् 'अप्पेगइआ पंडगवणं णच्चोअगं णाइमट्टिअं पविरलपफुसियं रयरेणुविणासणं दिव्वं सुरहिगंधोदकवासं वासंति, अप्पेगइआ निहयरयं णट्ठरयं भट्ठरयं पसंतरयं उवसंतरयं करेंति' इति ग्राह्यम्, अत्र व्याख्या प्राग्वत्, वाक्ययोजना त्वेवं—अपिर्बाढार्थे, एकका:—केचन देवाः पण्डकवने नात्युदकं नातिमृत्तिकं यथा स्यात्तथा प्रविरलप्रस्पृष्टं रजोरेणुविनाशनं दिव्यं सुरभिगन्धोदकवर्षं वर्षन्ति, अप्येकका: पण्डकवनं निहतरजः नष्टरजः भ्रष्टरजः प्रशान्तरजः उपशान्तरजः कुर्वन्ति, अथ सूत्रं—अप्येकका: देवाः पण्डकवनं आसिक्तसम्मार्जितोपलिप्तं तथा सिक्तानि जलेन अत एव शुचीनि सम्मृष्टानि कचवरापनयेन रथ्यान्तराणि-आपणवीथय इवापणवीथयो रथ्याविशेषा यस्मिन् तत्तथा कुर्वन्ति, अयमर्थः—तत्र स्थानस्थानानीतचन्दनादिवस्तूनि मार्गान्तरेषु तथा राशीकृतानि सन्ति यथा हट्टश्रेणिप्रतिरूपं दधति, यावत्पदात् 'पंडगवणं मंचाइमंचकलिअं करेंति, अप्पेगइआ णाणाविहरागऊसिअज्झयपडागमंडिअं करेंति, अप्पेगइआ गोसीसचंदणदद्दरदिण्णपंचंगुलितलं करेंति,



अप्पेगइआ उवचिअवंदणकलसं अप्पेगइआ चंदणघडसुकयतोरणपडिदुवारदेसभागं करेंति, अप्पेगइआ आसत्तोसत्त-विपुलवट्टवग्घारिअमल्लदामकलावं करेंति, अप्पेगइआ पंचवण्णसरससुरहिमुक्कपुंजोवयारकलिअं करेंति, अप्पेगइआ कालागुरुपवरकुंदुरुक्कतुरुक्कडज्झंतधूवमघमघंतगंधुद्धुआभिरामं सुगंधवरगंधियं' इति ग्राह्यं, पुनः प्रकारान्तरेण देवकृ-त्यमाह—'अप्पेगइआ हिरण्ण'इत्यादि, अप्येकका: हिरण्यस्य—रूप्यस्य वर्षं—वृष्टिं वर्षन्ति कुर्वन्तीत्यर्थः, एवं सर्वत्र यो-जना कार्या, नवरं सुवर्णं प्रतीतं, रत्नानि—कर्केतनादीनि वज्राणि—हीरकाः आभरणानि—हारादीनि पत्राणि—दमनका-दीनि पुष्पाणि फलानि च प्रतीतानि बीजानि सिद्धार्थादीनि माल्यानि—ग्रथितपुष्पाणि गन्धाः—वासाः वर्णो—हिङ्गुला-दिः यावच्छब्दाद्वस्त्रमिति चूर्णानि—सुगन्धद्रव्यक्षोदाः, तथा अप्येकका: हिरण्यविधिं—हिरण्यरूपं मङ्गलप्रकारं भाजय-न्ति शेषदेवेभ्यो ददतीत्यर्थः, एवं यावत्पदात् सुवर्णविधिं रत्नविधिं इत्यादिपदानि ग्राह्याणि चूर्णविधिं भाजयन्ति। अथ सङ्गीतविधिरूपमुत्सवमाह—'अप्पेगइआ चउव्विहं वज्जं' इत्यादि, अप्येककाश्चतुर्विधं वाद्यं वादयन्ति, तद्यथा—ततं—वीणा-दिकं विततं—पटहादिकं, श्रीहेमचन्द्रसूरिपादास्तु विततस्थाने आनद्धमाहुः, घनं—तालप्रभृतिकं शुषिरं—वंशादिकं, अप्येक-काः चतुर्विधं गेयं गायन्ति, तद्यथा—उत्क्षिप्तं—प्रथमतः समारभ्यमाणं पादात्तं—पादवृद्धं वृत्तादिचतुर्भागरूपपादबद्धमिति भावः मंदायमिति—मध्यभागे मूर्च्छनादिगुणोपेततया मन्दं मन्दं घोलनात्मकं, 'रोचितावसान'मिति रोचितं—यथोचि-तलक्षणोपेततया भावितं सत्यापितमितियावत् अवसानं यस्य तत्तथा, 'रोइअग'मिति पाठे रोचितकमित्यर्थः, स एव,

अप्येकका: चतुर्विधं नाट्यं नृत्यन्ति, तद्यथा—अञ्चितं द्रुतं आरभटं भसोलमिति, अप्येककाश्चतुर्विधमभिनयमभिनयन्ति, तद्यथा—दार्ष्टान्तिकं प्रातिश्रुतिकं सामान्यतो विनिपातिकं लोकमध्यावसानिकमिति, एते नाट्यविधयोऽभिनयविधयश्च भरतादिसङ्गीतशास्त्रज्ञेभ्योऽवसेयाः, अप्येकका द्वात्रिंशद्विधं अष्टमाङ्गलिक्यादिकं दिव्यं नाट्यविधिमुपदर्शयन्ति, स च येन क्रमेण भगवतो वर्द्धमानस्वामिनः पुरतः सूर्याभदेवेन भावितो—राजप्रश्नीयोपाङ्गे दर्शितस्तेन क्रमेणोपदर्श्यते, तत्र प्रारिप्सितमहानाट्यरूपमङ्गल्यवस्तुनिर्विघ्नसिद्ध्यर्थमादौ मङ्गल्यनाट्यं, तथाहि—स्वस्तिकश्रीवत्सनन्द्यावर्त्तवर्द्धमानकभद्रासनकलशमत्स्यदर्प्पणरूपाष्टमाङ्गलिक्यभक्तिचित्रं, अत्राष्टपदानां व्याख्या प्राग्वत्, नवरं तेषां भक्त्या—विच्छित्त्या चित्रं—आलेखनं तत्तदाकाराविर्भावना यत्र तत्तथा तदुपदर्शयन्तीत्यर्थः, अयमर्थः—यथा हि चित्रकर्मणि सर्वे जगद्वर्त्तिनो भावाश्चित्रयित्वा दर्श्यन्ते तथा तेऽभिनयविषयीकृत्य नाट्येऽपि, अभिनयः—चतुर्भिराङ्गिकवाचिकसात्त्विकाहार्यभेदैः समुदितैरसमुदितैर्वाऽभिनेतव्यवस्तुभावप्रकटनं, प्रस्तुते चाङ्गिकेन नाट्यकर्तॄणां तत्तन्मङ्गलाकारतयाऽवस्थानं हस्तादिना तत्तदाकारदर्शनं वा वाचिकेन प्रबन्धादौ तत्तन्मङ्गलशब्दोच्चारणं सभासदां मनसि रक्तिपूर्वकं तत्तन्मङ्गलस्वरूपाविर्भावनं मङ्गलनाट्यमिति १, अथ द्वितीयं नाट्यं, आवर्त्तप्रत्यावर्त्तश्रेणिप्रश्रेणिस्वस्तिकपुष्यमाणवर्द्धमानकमत्स्याण्डकमकराण्डकजारमारपुष्पावलिपद्मपत्रसागरतरङ्गवासन्तीलतापद्मलताभक्तिचित्रं, तत्र सृष्टिक्रमेण भ्रमद्भ्रमरिकादानैर्नर्त्तनमावर्त्तस्तद्विपरीतक्रमेण भ्रमरिकादानैर्नर्त्तनं प्रत्यावर्त्तः श्रेण्या—पङ्क्त्या स्वस्तिकाः श्रेणिस्वस्तिकाः, ते चैकपङ्क्तिगता अपि स्युरिति



अनुवृत्ताः श्रेणिस्वस्तिकाः प्रश्रेणिस्वस्तिकाः, अत्र प्रशब्दोऽनुवृत्तार्थे यथा प्रशिष्यः प्रपुत्र इत्यादौ, अयमर्थः—मुख्यस्यैकस्य स्वस्तिकस्य प्रतिशाखं गता अन्ये स्वस्तिका इत्यर्थः, एतेन प्रथमनाट्यगतस्वस्तिकनाट्याद् भेदो दर्शितः, तदभिनयेन नर्त्तनं, तथा पुष्यमाणः-पुष्टीभवन् तदभिनयेन नृत्यं, यथा हि पुष्टो गच्छन् जल्पन् श्वसिति बहु बहु प्रस्विद्यति दारुहस्तप्रायौ स्वहस्तावतिमेदस्विनौ चालयन् २ सभासदामुपहासपात्रं भवति तथाऽभिनयो यत्र नाट्ये तत्पुष्यमाणनाट्यं, एतदेवोत्तरसूत्रकारो 'अप्पेगइआ पीणेंती'ति सूत्रेण स्वयमेव वक्ष्यति, वर्द्धमानकः—स्कन्धाधिरूढः पुरुषस्तदभिनयगर्भितं नाट्यं वर्द्धमानकनाट्यं, एतेन प्रथमनाट्यगतवर्द्धमाननाट्याद्भेदो दर्शितः, मत्स्यानामण्डकं मत्स्याण्डकं मत्स्या हि अण्डाज्जायन्ते तदाकारकरणेन यन्नर्त्तनं तन्मत्स्याण्डकनाट्यं, एवं मकराण्डकमपि, न हि यथाकामविकुर्विणां देवानां किञ्चिदसाध्यं नाट्येन चानभिनेतव्यं येन तदभिनयो न सम्भवतीति, मत्स्यकाण्डपाठे तु मत्स्यकाण्डं—मत्स्यवृन्दं, तद्धि सजातीयैः सह मिलितमेव जलाशये चलति, सङ्घचारित्वात्, तथा यत्र नटोऽन्यनटैः सह सङ्गतो रङ्गभूमौ प्रविशति ततो वा निर्याति तन्मत्स्यकाण्डनाट्यम्, एवं मकरकाण्डपाठे मकरवृन्दं वाच्यं, तद्धि यथा विकृतरूपत्वेनातीव द्रष्टॄणां त्रासकृद् भवति तथा यन्नाट्यं तदाकारदर्शनेन भयानकं स्यात् तद्भयानकरसप्रधानं मकरकाण्डं नाम नाटकं, तथा जारनाटकं जारः-उपपतिः स च यथा स्त्रीभिः अतिरहस्येव रक्ष्यते तद्वद्यत्र मूलवस्तुतिरोधानात्तत्तदिन्द्रजालाविर्भावनेन सभासदा मनस्यन्यदेवावतार्यते तज्जारनामकं नाट्यं, तथा मारनाटकं मारः—कामस्तदुद्दीपकं नाटकं

मारनाटकं, शृङ्गाररसप्रधानमित्यर्थः, तथा पुष्पावलिनाट्यं यत्र कुसुमापूर्णसच्छिद्रवंशशलाकादिदर्शनेनाभिनयस्तत्पुष्पावलिनाटकं, तथा पद्मपत्रनाट्यं यत्र पद्मपत्रेषु नृत्यन्नटस्तथाविधकरणप्रयत्नविशेषेण वायुरिव लघूभवन् न पद्मपत्रं क्रमयति नापि त्रोटयति न वक्रीकरोति तत्पद्मपत्रोपलक्षितं नाट्यं पद्मपत्रनाटकं, तथा सागरतरङ्गाभिनयं नाम नाट्यं यत्र वर्णनीयवस्तुनो वचनचातुर्यवर्णनाद्यैः सागरतरङ्गा अभिनीयन्ते अथवा यत्र तकतक झें झें किटता किटता कुकु इत्यादयस्तालोद्घट्टनार्थकवर्णा बहवोऽस्खलद्गत्या प्रोच्यन्ते तत्सागरतरङ्गनामनाटकं, एवं वसन्तादिऋतुवर्णने वासन्तीलतापद्मलतावर्णनाभिनयं नाटकं, नन्वेवं सत्यभिनेतव्यवस्तूनामानन्त्येन नाट्यानामप्यानन्त्यप्रसङ्गस्तेन द्वात्रिंशत्सङ्ख्याकत्वविरोधः, उच्यते, एषा च सूत्रोक्ता सङ्ख्या, उपलक्षणाच्चान्येऽपि तत्तदभिनयकरणपूर्वकं नाट्यभेदा ज्ञेयाः, एवं सर्वनाट्येष्वपि ज्ञेयं २, अथ तृतीयं–ईहामृगऋषभतुरगनरमकरविहगव्यालकिन्नररुरुसरभचमरकुञ्जरवनलतापद्मलताभक्तिचित्रं, तत्र ईहामृगा–वृकाः ऋषभादयः प्रतीताः नवरं रुरवश्चमराश्च मृगविशेषाः वनो–वृक्षविशेषस्तस्य लताः ३, अथ चतुर्थं–एकतोवक्रद्विधातोवक्रएकतश्चक्रवालद्विधातश्चक्रवालचक्रार्द्धचक्रवालाभिनयात्मकः, एकतोवक्रं नाम नटानां एकस्यां दिशि धनुराकारश्रेण्या नर्त्तनं, अनेन श्रेणिनाट्याद्भेदो दर्शितः, एवं द्विधातोवक्रं द्वयोः परस्पराभिमुखदिशोः धनुराकारश्रेण्या नर्त्तनं, तथा एकतश्चक्रवालं–एकस्यां दिशि नटानां मण्डलाकारेण नर्त्तनं, एवं द्विधातश्चक्रवालं–द्वयोः परस्पराभिमुखदिशोर्ज्ञेयं, तथा 'चक्रार्द्धचक्रवालं' चक्रस्य–रथाङ्गस्यार्द्धं तद्रूपं यच्चक्रवालं–मण्डलं तदाकारेण नर्त्तनं अर्द्धमण्डलाकारेणेत्यर्थः, तदभिनयं नाम नाटकं, एकतोवक्रादीनां क्रमेण स्थापना यथा–



इदं च नटानां नर्त्तने संस्थानविशेषप्रधानं नाम नाटकं ४, अथ पञ्चमं–चन्द्रावलिप्रविभक्तिसूर्यावलिप्रविभक्तिवलयताराहंसैकमुक्ताकनकरत्नावलिप्रविभक्त्यभिनयात्मकमावलिप्रविभक्तिनामकं, तत्र चन्द्राणामावलिः–श्रेणिस्तस्याः प्रविभक्तिः–विच्छित्ती रचनाविशेषस्तदभिनयात्मकं, एवं सूर्यावलिप्रविभक्त्यभिनयात्मकं, तथा वलयादिरत्नान्तेषु पदेषु आवलिशब्दो योज्यस्तेन वलयावलिप्रविभक्त्यादि, अयमर्थः–पङ्क्तिस्थितानां रजतस्थालहस्तानां भ्रमरीपरायणानां नटानां नाट्यं, एवं वलयहस्तानां वलयनाट्यं, एवं वर्त्तुलकहस्तगतानां तारावलिनाट्यं, अनयैव युक्त्या तत्सदृशवस्तुदर्शनेन अचिन्त्यत्वाद्वा वैक्रियशक्तेस्तद्वस्तुदर्शनेन तत्तदभिनयकरणं तत्तन्नामकं नाट्यं ज्ञेयं, एतच्चावलिकाबद्धमित्यावलिकाप्रविभक्तिनाम नाट्यं ५, अथ षष्ठं चन्द्रसूर्योद्गमनप्रविभक्तिकृतमुद्गमनप्रविभक्ति चन्द्रसूर्ययोरुद्गमनं–उदयनं तत्प्रविभक्ती–रचना तदभिनयगर्भं यथा उदये सूर्यचन्द्रयोर्मण्डलमरुणं प्राच्यां चारुणः प्रकाशस्तथा यत्राभिनीयते तदुद्गमनप्रविभक्ति ६, अथ सप्तमं–चन्द्रसूर्यागमनप्रविभक्ति चन्द्रस्य सविमानस्यागमनं–आकाशादवतरणं तस्य प्रविभक्तिर्यत्र नाट्येऽभिनयेन दर्शनं, एवं सूर्यागमनप्रविभक्ति ७, अथाष्टमं–चन्द्रसूर्यावरणप्रविभक्तियुक्तमावरणप्रविभक्ति, यथा हि

